

वैदिकधर्मश्रद्धालूनां पण्डितकुलभूषणानां श्रीमद्राजर्षिश्रीनिवासमहाराजसूनूनां
बी. ए. इत्युपपदधारिणां प्रतिनिधिबिरुदभाजां श्रीमतां भवानीराय
इत्यथवा बालासाहेब इत्यपराभिधानां औन्धाधीशानां
महनीयेनाश्रयेण

वाजसनेयि-माध्यन्दिन-शुक्ल

# यजुर्वेद-संहिता

स्वाध्यायमण्डलस्थानेकपण्डितानां साहाय्येन विविधप्राचीनहस्तलिखितपुस्तकानुसारेण

भट्टाचार्येण श्रीपादशर्मणा दामोदरभट्टसूनुना सातवलेकरकुलजेन
संशोधिता

सा च
औन्धराजधान्यां
द्वितीयवारं
भारतमुद्रणालये मुद्रयित्वा स्वाध्यायमण्डलद्वारा प्रकाशिता

विक्रमीयसंवत् २००३; शालीवाहनशकः

मूल्यं रूप्यकत्रयः ।

ॐ

# अथ वेद-विषयकः

## प्रस्तावः ।

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दाँसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥
( ऋग्वेदः १०।९०।९; वा० य० ३१।७ )

यस्मादृचो अपातक्षन्यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखं
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥
( अथर्व० १०।७।२० )

अस्य महतो भूतस्य निःश्वसितमेतद्
यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः ॥
( बृ० उ० २।४।१० )

सनातनस्याऽस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति श्रुतिस्मृतिपुराणेतिहासानां सनातन एव राद्धान्तो, निखिलैः शास्त्रदर्शिभिः स्वीकृतश्च । यथैतन्महद्भूतं सर्वत्र सर्वथा सर्वदा परिपूर्णं तथैव तस्मादेवोत्पन्नोऽयं वेदराशिः सर्वत्र सर्वथा सर्वदा परिपूर्ण एव भवितुं योग्य इति सुतरां सङ्गतमेव—

'पूर्णात्पूर्णमुदचति' ( अथर्व० १०।८।२९ )

इति न्यायात् । संभवत्येव पूर्णस्य प्रकाशः पूर्णादेव, कथं नाम स्वयं परिपूर्णमपूर्णात्प्रकाशितं भवेत् ? भवेच्चेत् कथं नाम त[illegible]र्णमित्याख्यायेत । एवं सनातनमहद्भूतनिःश्वासभूतोऽयं सनातनो [illegible]र्याणां सम्मानयोग्यो धर्मग्रन्थ आब्राह्मणःकालादद्यावधि वर्णाश्रमधर्ममार्गावलम्बिभिः सर्वैरपि स्वतःप्रमाणत्वेन स्वीकृतश्च । मनुरप्याह—

वेदोऽखिलो धर्ममूलम् । ( मनु० २।६ )

इति । सोऽयं सनातनो वेदराशिर्वस्तुतः—

एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ।
( श्रीमद्भागवते ९।१४।४९ )

इत्युक्तत्वादेकः सन्नपि विज्ञान–कर्म–समुपासना–ब्रह्मसाक्षात्काररूपचतुर्विधप्रयोजनभेदेन ऋग्यजुःसामाथर्ववेदसंहिता[illegible] चतुर्धा संविभक्तोऽपि, परापरसोपानस्थितानां धर्मनिष्ठावतां मनुष्याणामधिकारभेदतोऽवस्थाभेददृष्ट्या तत्रतत्रानुष्ठानयोग्य-[illegible]न सनातनमेकमेव मानवधर्मं सर्वेभ्यो मानवेभ्यः समुपदिशति । अत एवोक्तं—

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥
( मनु० २।७ )

इति । मानवादिवाक्यप्रतिपादितनानाविधधर्मजातबीजभूतं तत्त्वं वेद एवाभिहितमिति सुक्तवान् [illegible] ।

तत्र ऋग्वेदस्य प्राधान्येन विज्ञानं प्रतिपाद्यं, यजुर्वेदस्य नानाविधाध्वररूपकर्माणि, साम्नामुपासनाः, आथर्वणानां च ब्रह्मात्मसाक्षात्कारः । तदिदं प्राधान्येन वेदचतुष्टयस्य विषयजातं मन्त्रेषु सुस्पष्टतयैव वेदविचारकैर्यद्यपि न ज्ञातुमशक्यं तथापि स्पष्टतायै वेदचतुष्टयस्य विषयचतुष्टयं विशदीक्रियते नातिविस्तरेण । ऋग्वेदस्य प्रयोजनं ऋग्भिरेवैवं वर्ण्यते—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ इति
( ऋग्वेद० १।१६४।४६; ३९ )

विशेषेण प्राज्ञा मेधाविनस्तत्त्वदर्शिनो ब्रह्मनिष्ठा नामरूपरहितमेकमपि सत्यमद्वितीयं ब्रह्माग्नीन्द्रादित्यादि-विविधदेवता-नाम-भेदेन बहुधा वर्णयन्ति । तथा च—

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति ।
( ऋग्वेद० १०।११४।५ )

एकं सन्तमपि तं बहुधा कल्पयित्वा प्राज्ञाप्राज्ञसमवबोधाय प्रवदन्ति सन्तः । अनामापि तैर्बहुभिर्नामभिरुपदिश्यते, नामभेदे सत्यपि वैदिकेषु मन्त्रेषु क्वचिदपि वर्ण्यभेदो नास्त्येव । य एतदेवं न जानाति स ऋग्भिः किं करिष्यति ? ये तु सुविज्ञानवन्त एतदेवं जानन्ति त एव 'सजोषा धीरा गुहा चतन्तं, नमो युजानं नमो वहन्तं, ब्रह्म, मन्त्राणां पदैरनुग्मन् तदेवोपसीदन्ति । ( ऋ० १।६५।१ )'

अस्यैवैकस्य सद्वस्तुनो वर्णनं ऋङ्मन्त्राणां मुख्यं प्रयोजनं, तत्तु अग्न्यादिविभिन्नदेवतास्तुतिमिषेण ऋग्वेदे सर्वत्र दृश्यते । ऋचन्ति स्तुवन्ति वर्णयन्ति वा सत्तत्त्वमिति ऋचः, स एव ऋग्वेदः । इति व्युत्पत्त्या सुस्पष्टमेवास्यर्ग्वेदस्य सत्तत्त्वविज्ञानदर्शनमेव मुख्यं प्रयोजनमिति ।

सत्तत्त्वविज्ञानश्रवणात्तत्प्राप्त्युपायानुष्ठानाय चोदना भवत्येव । अनया चोदनया चोदितो मानवः, 'क्रतुमयोऽयं पुरुषः' इति स्वस्य क्रतुमयत्वं मनसि निधाय, क्रतुभिरेव स्वस्योन्नयनं शक्यमिति मन्वानः, केनानुष्ठानेन तदृङ्मन्त्रप्रतिपादितं सत्तत्त्वं प्रत्यक्षीकुर्यामिति चिन्तयन्, यदा कुण्ठितगतिर्भवति तदैव यजुषामध्वरमार्गोपदेशस्याधिकारी भवति । तत्राध्वरवेदे प्रथमे यजुषि—

देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वम् ।
( वा० य० १।१ )

इत्याप्यायनाय श्रेष्ठतममेव कर्मानुष्ठेयं नाऽन्यदिति समामननं, हीनक[illegible] प्रशस्ततमसत्कर्मानुष्ठानमेवासंशयं चित्तशुद्धिद्वारा सद्वस्तुप्रापकं भवतीति दर्शयति । एवं सद्वस्तुप्रापकः प्रशस्ततमोऽध्वरमार्गो यजुर्भिरुपदिश्यते ।

यथाऽदर्शके दर्शे षोडशिनो दर्शनेच्छायां संजातायां सत्यामपि पौर्णमास्यामेव तस्य षोडशकलानिधेः संपूर्णं संदर्शनं संभवति, तद्वदेव दर्शक्रतुमारभ्य षोडशिन आत्मनो दर्शनकामेन यजमानेन प्रशस्ततमक्रत्वारम्भे कृतेऽपि पुरुषमेध-सर्वमेध ( अ० ३०,३१,३२ ) मखादीनां समाप्त्यनन्तरमेव सर्वशान्तिकरण- ( अ० ३६ ) पूर्वकं—

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
( वा० य० ४०।१ )

इत्यन्तिमेनाध्यायेन षोडशिन आत्मनः सर्वत्र दर्शनं कर्तुं शक्यम्। एतदेव यथाक्रमोन्नति–सोपान–परम्परया यजुर्भिः दर्श्यते, यथा—

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥
(वा० य० ३१।१८)

न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः।
(वा० य० ३२।३)

इत्यादि–पुरुषमेध–सर्वमेधादि–महामखप्रतिपादकैर्मन्त्रैस्तस्यैव सद्वस्तुनो ब्रह्मणः प्रशंसनमयं वर्णनमस्याध्वरवेदस्यापि तदेव साध्यमिति निष्ठां द्रढयति। एतदेव साध्यं यजुषामध्वरवेदेनान्तिमेनाध्यायेन ईशावास्यादिना साध्यते। एषा दर्शयज्ञ- (अ० १)- मारभ्य ब्रह्मयज्ञ (अ० ४०) पर्यन्तं क्रतुसङ्गतिरित्यवबुद्ध्य, यजुषां प्रशस्ततमकर्मदर्शनमेव प्रयोजनं चित्तशुद्धि-द्वारा सद्वस्तुप्रापणायालं भवतीति ज्ञेयम्।

'यर्क् तत्साम।' (छां० उ० १।३।४) इति छान्दोग्योपनिषदुपदेशे या ऋक् तदेव सामेति प्रतिपादनेन ऋचां साम्नां चाभेदः साध्यस्य किल प्रदर्शितः। यत्तु ऋग्भिः स्तूयते प्रशस्यते वर्ण्यते वा, तदेव सामभिर्गीयते समुपास्यते निदिध्यास्यते वेति, सामवेदस्य सत्तत्त्वोपासनारूपत्वं स्फुटतरं भवति।

अथाथर्ववेदस्य ब्रह्मभूतानां मन्त्राणां प्रयोजनमात्मनि ब्रह्मसाक्षात्कारस्तत्तु तेष्वेव मन्त्रेषु दृश्यताम्।—

ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम्।
(अथर्व० १०।७।१७)

एको ह देवो मनसि प्रविष्टः। (अथर्व० १०।८।२८)
अष्टाचक्रा नवद्वारा देवानां पूरयोध्या।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः॥
तस्मिन्हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते।
तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः॥
(अथर्व० १०।२।३१,३२)

पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्।
तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः॥
(अथर्व० १०।८।४३)

इत्येवं विविधैर्मन्त्रैः स्वस्यैव हृदयपुण्डरीके ब्रह्मसाक्षात्कारकरणं लक्ष्यमथर्ववेदस्येति सिद्धमेव, नैतत्प्रमाणान्तरमपेक्षते। एवं प्रयोजनभेदेन चतुर्धा संविभक्तस्यापि वेदस्यात्मनि ब्रह्मानुभूतिरेव नितरां सन्धानमिति–

वेदैश्च सर्वैरहमेव वेद्यः॥ (भ० गी० १५।१५)
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।
(भ० गी० १५।१८)

इत्यादिपुण्यवचनैः श्रीमता भगवतैव स्वयमर्जुनोपदेशमिषेण प्रदर्शितं किल सर्वेषां वेदानां तदेकमेव लक्ष्यमिति। एवमेकस्यापि चतुर्धा विभक्तस्य वेदस्य पुनरनेकधैव शाखाभेदोऽपि दृश्यते, यथा–

एकविंशत्यध्वयुक्तमृग्वेदमृषयो विदुः।
सहस्राध्वा सामवेदो यजुरेकशताध्वकम्॥
नवाध्वाऽऽथर्वणोऽन्ये तु प्राहुः पञ्चाशदध्वकम्॥

इति षड्गुरुशिष्यः सर्वानुक्रमणीवृत्तौ कथयामास। यथा च–

एकविंशतिभेदेन ऋग्वेदं कृतवान्पुरा।
शाखानां तु शतेनाथ यजुर्वेदमथाकरोत्॥
सामवेदं सहस्रेण शाखानां च विभेदतः।
आथर्वणमथो वेदं बिभेद नवकेन तु॥

( कूर्मपुराणे ४९।५१–५२ )

एवमनेकविधे शाखाविस्तारे सत्यपि चतसृणामेव संहितानां क्वचित्पाठभेदेन, क्वचिदानुपूर्वीभेदेन क्वचिदन्यैर्वा कैश्चिद्भेदैः सर्वासु शाखासूपस्थितत्वाच्चतसृणामासां संहितानां वेदराशित्वमित्युच्यते वैदिकैर्न च तत्केनाप्यद्यावध्यवधीरितमतस्तदेव वयमत्र प्रमाणीकुर्मः।

एष वेदो ब्राह्मणेनाध्येतव्यो द्विजैर्वाऽवश्यं पठितव्यश्च। अनधीयानो विप्रो द्विजत्वाद्धीयत इति स्मार्तसिद्धान्तमुररीकृत्य द्विजानां स्वाध्यायसौकर्यसाधननिर्माणाय स्वाध्यायमण्डलं नाम विद्वत्परिषद्रूपं पूर्वं पञ्चविंशतिवर्षेभ्य औन्धनगरे स्थापितम्। वैदिकधर्मस्य पुनरुज्ज्वलीकरणमेव स्वाध्यायमण्डलस्य लक्ष्यम्। तत्सिद्ध्यर्थं चतुर्णामपि वेदानामशुद्ध्यादिदोषरहितं मुद्रणं परमावश्यकमिति निश्चितमेव। अद्यावधि वेदसंहितानां बहवो ग्रन्था भारते वर्षे यूरोपीयदेशे च मुद्रिताः सन्ति। भारतवर्षमुद्रितवैदिकग्रन्थापेक्षया यूरोपीयदेशमुद्रिता ग्रन्था न्यूनमुद्रणादिदोषा इत्येतद्यथा तेषां प्रशंसावहं भवति, तथैवास्माकं वैगुण्यमपि प्रकाशयति। यूरोपीयदेशमुद्रितानां पुस्तकानां बहुमूल्यत्वात्ते ग्रन्था अस्मद्देशीयानामुपकाराय न भवन्तीति कृत्वा वेदसंहितानां मुद्रणं अत्रैव कर्तव्यमिति बहोः कालान्मनीषितमासीत्। अद्यावधि मुद्रिता ग्रन्था मुद्रणादिदोषयुक्ताः सन्तीत्यतो दोषराहित्याय विशेषं विमृश्यैवैते ग्रन्था मुद्रणीया इत्यत्र न कापि विप्रतिपत्तिर्भवितुमर्हति।

चतसृणां संहितानां समुपलब्धशाखासंहितानां च स्वाध्यायसौकर्यदृष्ट्याऽशुद्ध्यादिदोषरहितं यावच्छक्यं तावन्मुद्रणं कार्यमिति स्वाध्यायमण्डलस्थैः कर्मचारिभिः पूर्वमेव निर्धारितम्। कर्मैतत्तु विशेषेण धनापेक्षि वर्तत इति मत्वैतः पूर्वं मुद्रणं न प्रारब्धम्।

एतस्मिन्नेव समये श्रीमद्भिः पण्डितप्रतिनिधिकुलभूषणैः श्रीभवानीरायभूपैरौन्धनरेशैः पञ्चसहस्ररौप्यमुद्रादानं केवलं वेदमुद्रणार्थमेव स्वाध्यायमण्डलाय कृतम्, येन धनेन वाजसनेयिमाध्यन्दिनशुक्लयजुर्वेदसंहिताया मुद्रणं कृतम्।

यजुर्वेदस्य शाखाभेदविषयेऽपि किञ्चिदत्रोल्लेखनीयम्। 'यजुरेकशताध्वकं' इत्युक्तरीत्याऽस्यैकशतं शाखा आसन्निति निश्चीयते। परन्तु चरणव्यूहे षडशीतिसंख्यात्वेनैव तासां परिगणनं कृतम्—

यजुर्वेदस्य षडशीतिर्भेदा भवन्ति। तत्र—

"(१) चरका नाम द्वादश भेदा भवन्ति=चरकाः, आह्वरकाः, कठाः,
प्राच्यकठाः, कपिष्ठलकठाः, चारायणीयाः, वारायणीयाः,
वार्तान्तवेयाः, श्वेताश्वतराः, औपमन्यवः, पाताण्डिनीयाः,
मैत्रायणीयाश्चेति॥ (१२)
"तत्र मैत्रायणीया नाम सप्त भेदा भवन्ति=मानवाः, दुन्दुभाः,
चैकेयाः, वाराहाः, हारिद्रवेयाः, श्यामाः, श्यामायनीयाश्चेति॥ (७)

"(२) वाजसनेया नाम सप्तदश भेदा भवन्ति=जाबालाः, बौधेयाः,
काण्वाः, माध्यन्दिनाः, शापीयाः, तापायनीयाः, कापालाः,
पौण्ड्रवत्साः, आवटिकाः, परमावटिकाः, पाराशरीयाः,
वैधेयाः, वैनेयाः, औधेयाः, गालवाः, बैजवाः, कात्यायनीयाश्चेति॥ (१७)

"( ३ ) तैत्तिरीयका नाम द्विभेदा भवन्ति = औख्याः, खाण्डिकेयाश्चेति । (२)
तत्र खाण्डिकेया नाम पञ्च भेदा भवन्ति = आपस्तम्बाः,
बौधायनाः, सत्याषाढाः, हैरण्यकेशाः, कात्यायनाश्चेति ॥ (५)
"तत्र कठानां......चतुश्चत्वारिंशदुपग्रन्थाः ॥" (४४)
( चरणव्यूहे २ )

व्याकरणमहाभाष्ये पस्पशाह्निके भगवता पतञ्जलिना कथितमस्ति यद्यजुर्वेदस्यैकशतं भेदास्तदेव कूर्मपुराणादिषु दृश्यते । परन्तु चरणव्यूहरचनासमये केवलं तेषां षडशीतिभेदा एवावशिष्टाः स्युः । अथवा कठानामुपग्रन्थनामलेखनाभावात्तेषां शाखापरिगणने गणनमपि कर्तुं न योग्यं, येन केवलं द्विचत्वारिंशदेव शाखास्तस्मिन्काल आसन्निति वक्तुं समीचीनम् । अन्य एकोनषष्टिशाखाभेदाश्चरणव्यूहरचनासमयात्पूर्वमेव प्रनष्टाः ।

तास्वपि द्विचत्वारिंशच्छाखासु केवलमिदानीं पञ्चैव शाखासंहिताग्रन्था उपलभ्यन्तेऽन्ये सप्तत्रिंशद्ग्रन्था लुप्तप्राया एव । उपलब्धयजुःसंहितानां नामानि काठकसंहिता, मैत्रायणीसंहिता, काण्वसंहिता, वाजसनेयिसंहिता, तैत्तिरीयसंहितेति । तत्रेदं वाजसनेयिसंहिताया मुद्रणं कृतम् ।

वाजसनेयिसंहिताया अद्यावधि कतिपयानि पुस्तकानि मुद्रितानि सन्ति, तेषु कति पत्रात्मकानि, कति च पुस्तकरूपाणि, कति संस्कृतभाष्ययुतानि, कति च केवलमुदात्तादिस्वरचिन्हयुतानि सन्ति । परन्तु सर्वेष्वपि तेषु पुस्तकेषु बहूनि प्रमादस्खलितानि दृश्यन्ते, अतस्तेषां दोषस्थानप्रमाणन्यूनाधिकतया स्वाध्यायोपयोगित्वं न्यूनाधिकतरं भवति । अद्यावधि मुद्रितपुस्तकेषु प्रधानान्येतानि परिगणनीयानि—

( क ) पं० वेबरमहोदयेन शार्मण्यदेशे मुद्रितं महीधरभाष्ययुक्तं वाजसनेयिसंहितापुस्तकं मन्त्रपाठनिश्चयकरणे कृतबहुपरिश्रमत्वात्सर्वेषु मुद्रितपुस्तकेषु प्रधानं स्थानमर्हति । [ एतत्त्विदानीं नोपलभ्यते । अस्माभिस्तु पञ्चाब्देशीयलवपुरीयाद् वैदिकपुस्तकालयाच्छ्रीमत्या आर्यप्रतिनिधिसभायाः कृपाप्रसादेन प्राप्तम् । तदर्थं श्रीमत्यै सभायै धन्यवादान्वितरामः । ]

( ख ) मुम्बय्यां निर्णयसागरयन्त्रालये मुद्रितं भाष्यद्वययुतं वाजसनेयिसंहितापुस्तकं विद्वद्भिः श्रीमद्भिर्वासुदेवपणशीकरशास्त्रिभिः संशोधितं तदूर्ध्वं गणनायोग्यमस्ति ।

( ग ) मुम्बय्यामेव व्यङ्कटेश्वरयन्त्रालये मुद्रितानि कतिपयानि वाजसनेयिसंहितापुस्तकानि पत्रात्मकानि पुस्तकरूपाणि मूलमात्राणि भाषाटीकासहितानि च सन्ति ।

( घ ) अजमेरनगरीये वैदिकयन्त्रालये मुद्रितं मूलमात्रं वाजसनेयिसंहितापुस्तकम् । श्रीमद्दयानन्दभाष्ययुक्तमपि तत्रैव मुद्रितं, पाठाय योग्यमस्ति ।

( ङ ) कलिकातानगरे मुद्रितानि कतिपयानि पुस्तकान्यत ऊर्ध्वं गणनीयानि सन्ति ।

एतेषूपरि निर्दिष्टेषु पुस्तकेषु यथाक्रममेव पूर्वस्मादुत्तरस्मिन्नधिकान्यधिकानि स्खलितानि सन्ति । शार्मण्यदेशमुद्रितमेव पुस्तकं सर्वेषु न्यूनस्खलनयुक्तं वर्तते । तथाप्येतत्कण्डिकारूपेण मन्त्रान्संविभज्य मुद्रितत्वान्न नित्यपाठायोपयोगीति निश्चितमेव ।

नित्यपाठाय स्खलनादिदोषरहितमेव पुस्तकमावश्यकमिति मत्वाऽस्माभिर्यावच्छक्यं तावन्निर्दोषमुद्रणायैवैष यत्नः कृतः । तथापि न कथ्यतेऽत्रैकमपि स्खलनं नास्तीति, परन्तूपलब्धमुद्रितपुस्तकापेक्षयात्रातिन्यूनस्खलनानि भवेयुरिति निश्चयोऽस्ति । यावच्छक्यं तावदस्माभिर्निर्दोषमुद्रणाय महान्यत्नः कृतः । प्रथमं तावत्प्राचीनहस्तलिखितविविधपुस्तकान्यवलोक्य मन्त्रपाठनिश्चयः कृतः । एतदर्थं काशी—जनस्थान—त्र्यम्बकेश्वर—ग्वालेराहमदनगरादिनानानगरेभ्यो वैदिकब्राह्मणेभ्यो हस्तलिखितानि बहूनि पुस्तकान्यानीय तेषां पाठतुलनया यथायोग्यमालोडनं कृतम् । अनयैव तुलनया मुद्रितपुस्तकानां बहूनि दोषस्थलानि स्वयमेव व्यक्तीभूतानि । प्रायशो यथा व्रणिनां रोगिणां वाऽङ्गसंशोधनं वैद्यैः क्रियते, तथैव वैदिकैर्वेदपुस्तकानां संशोधनं क्रियते । अतो येषां कुले परम्परया वेदाध्ययनं भवति, तेषां वेदपुस्तकानि पाठनिश्चयाय

सुनिश्चयेन प्रामाणिकानि भवन्ति। एतदेवास्माभिः प्रत्यक्षीकृतमस्यां मन्त्रपाठतुलनायाम्। अत्रानीतेषु हस्तलिखितग्रन्थेषु कतिपया ग्रन्था अत्यन्तमेवाशुद्ध्यादिदोषरहिता आसन्, तेषां चालोकनेन मन्त्रपाठनिश्चयकरणमतीव सुकरं जातमिति सानन्दं तेषां प्रशंसनमत्र क्रियते। विशेषतस्त्वहमदनगरीयवैदिकधर्मसभाया मन्त्रिमहोदयैः [illegible] भिः कतिपयानि बहुमूल्यानि पुस्तकानि संप्रेष्य स्वाध्यायमण्डलस्यैतत्संशोधनकर्मातीव सुकरं कृतमिति तेऽवश्यं धन्यवादार्हाः।

यत्र यत्र पुस्तकेषु मुद्रितेष्वमुद्रितेषु वा परस्परविरोधकपाठदर्शनात्किञ्चिदपि शङ्कास्थानं समुत्पन्नं तत्रतत्र घनान्त-वेदपाठिनां वैदिकानां साहाय्येन पाठनिश्चयः कृतः। एवंरीत्या यथा दोषन्यूनता भवेत्तथैवात्र यत्नो विहितः। एष एवास्य पुस्तकस्य विशेषः। अस्य कृते औन्ध–जनस्थान–ग्वालेर–देशीयानां निपुणघनपाठिनां वैदिकानां ब्राह्मणानां विशेषेणैव साहाय्यमभूदतस्ते सर्वेऽपि धन्यवादार्हाः।

मुद्रणेऽपि मन्त्राः परस्परमसंश्लिष्टा असङ्कीर्णा वा यथा भवेयुस्तथैव पृथक्पृथगेव मुद्रितास्तेन नित्यपाठायैतत्पुस्तकम-त्यन्तमुपयोगि भविष्यतीति निश्चय एवास्ति।

शुक्लेषु यजुःषु वाजसनेयिनां संहिता काण्वानां संहितानुसारिणी एवाऽस्ति। अतो वाजसनेयिसंहिताध्ययनावसरे काण्व-संहितापाठविशेषदर्शनमावश्यकमेवेति मत्वा, काण्वसंहिताऽस्माभिः स्वतंत्रतया मुद्रिताऽस्ति।

अस्याः संहितायाः सर्वेषां मन्त्राणां पादसूचिस्तथा सर्वानुक्रमसूत्रादिकं स्वतंत्रपुस्तकरूपेण मुद्रितम्। मन्त्राणां पादसूचिस्तु न कुत्राप्यद्यावधि मुद्रिता। अत आशास्यते सर्वमेवैतद्बहूपयोगि भविष्यति स्वाध्यायशीलेभ्यो वैदिकधर्मावलम्बिभ्य इति।

यस्य निःश्वसितमेतत्तस्यैव परमात्मनोऽनुग्रहेणैतत्संशोधनमुद्रणादिकं कार्यं प्रारब्धं तस्यैव कृपयैतत्समाप्तिमगमत्। अतस्तमेव प्रणतिसहस्रपुरःसरं मनसाऽभ्यर्च्येदानीं विरमति–

औन्ध नगरे।
वैशाख शु. १५ विक्रमीयसंवत् २००३

श्रीपादशर्मा दामोदरसूनुः सातवलेकरकुलजः



वाजसनेयि-माध्यन्दिन-शुक्ल

# यजुर्वेद-संहिता ।

## अथ प्रथमोऽध्यायः।

॥ओ३म्॥ इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्या-
यध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा व स्तेन ईशत माघशꣳसो ध्रुवा अस्मिन्
गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥१॥
वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्वनो घर्मोऽसि विश्वधा असि ।
परमेण धाम्ना दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ॥२॥
वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ।
देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥३॥
सा विश्वायुः सा विश्वकर्मा सा विश्वधायाः ।
इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि विष्णो हव्यꣳ रक्ष ॥४॥
अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । इदमहमनृतात्सत्यमुपैमि ॥५॥
कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति । कर्मणे वां वेषाय वाम् ॥६॥
प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । उर्वन्तरिक्षमन्वेमि ॥७॥
धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः ।
देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥८॥
अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ।
विष्णुस्त्वा क्रमतामुरु वातायापहतꣳ रक्षो यच्छन्तां पञ्च ॥९॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि ॥ १० ॥

भूताय त्वा नारातये स्वरभिविख्येषं दृꣳहन्तां दुर्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यꣳ रक्ष ॥ ११ ॥

पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इममद्य यज्ञं नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवम् ॥१२॥

युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षिता स्थ । अग्नये त्वा जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि । दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ॥ १३ ॥

शर्मास्यवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु ।
अद्रिरसि वानस्पत्यो ग्रावाऽसि पृथुबुध्नः प्रति त्वाऽदित्यास्त्वग्वेत्तु ॥ १४ ॥

अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि बृहद्ग्रावाऽसि वानस्पत्यः स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व । हविष्कृदेहि हविष्कृदेहि ॥ १५ ॥

कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयꣳ सङ्घातꣳ सङ्घातं जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूता अरातयोऽपहतꣳ रक्षो वायुर्वो विविनक्तु देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ॥ १६ ॥

धृष्टिरस्यपाऽग्ने अग्निमामादं जहि निष्क्रव्यादꣳ सेधा देवयजं वह ।
ध्रुवमसि पृथिवीं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥१७॥

अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय । धर्त्रमसि दिवं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय । विश्वाभ्यस्त्वाशाभ्य उपदधामि चित स्थोर्ध्वचितो भृगूणामङ्गिरसां तपसा तप्यध्वम् ॥ १८ ॥

शर्मास्यवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वाऽदितिर्वेत्तु ।
धिषणाऽसि पर्वती प्रति त्वाऽदित्यास्त्वग्वेत्तु दिवस्कम्भनीरसि धिषणाऽसि पार्वतेयी प्रति त्वा पर्वती वेत्तु ॥१९॥

धान्यमसि धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा ।
दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि ॥२०॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्[१]। सं वपामि[२] समाप ओषधीभिः समोषधयो रसेन । सꣳ रेवतीर्जगतीभिः पृच्यन्ताꣳ सं मधुमतीर्मधुमतीभिः पृच्यन्ताम्[३] ॥२१॥

जनयत्यै त्वा संयौमी[१]दमग्नेरि[२]दमग्नीषोमयो[३]रिषे त्वा[४] घर्मोऽसि विश्वायु[५]रुरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथता[६]मग्निष्टे त्वचं मा हिꣳसी[७]द्देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके[८] ॥ २२ ॥

मा भेर्मा संविक्था[१] अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात्[२] त्रिताय त्वा[३] द्विताय त्वै[४]कताय त्वा[५] ॥ २३ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददेऽध्वरकृतं देवेभ्य[१] इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः[२] ॥ २४॥

पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषं[१] व्रजं गच्छ गोष्ठानं[२] वर्षतु ते द्यौ[३]र्बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्[४] ॥ २५ ॥

अपाररुं पृथिव्यै देवयजनाद्वध्यासं[१] व्रजं गच्छ गोष्ठानं[२] वर्षतु ते द्यौ[३]र्बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्[४]। अररो दिवं मा पप्तो[५] द्रप्सस्ते द्यां मा स्कन्[६] व्रजं गच्छ गोष्ठानं[७] वर्षतु ते द्यौ[८]र्बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्[९] ॥ २६ ॥

गायत्रेण त्वा छन्दसा परिगृह्णामि[१] त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि[२] जागतेन त्वा छन्दसा परिगृह्णामि[३]। सुक्ष्मा चासि शिवा चासि[४] स्योना चासि सुषदा चास्यू[५]र्जस्वती चासि पयस्वती च[६] ॥ २७ ॥

पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् । यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासो अनुदिश्य यजन्ते[१]। प्रोक्षणीरासादय[२] द्विषतो वधोऽसि[३] ॥ २८ ॥

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो[१] निष्टप्तꣳ रक्षो निष्टप्ता अरातयः[२]।
अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि[३]।
प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो[४] निष्टप्तꣳ रक्षो निष्टप्ता अरातयः[५]।
अनिशितासि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै सम्मार्ज्मि[६] ॥ २९ ॥

अदित्यै रास्नासि[१] विष्णोर्वेष्पोऽस्यू[२]र्जे त्वा[३] ऽदब्धेन त्वा चक्षुषावपश्यामि ।
अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्ने धाम्ने मे भव यजुषे यजुषे[४] ॥ ३० ॥

सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥३१॥

[ अध्यायः १, कंडिका: ३१, मंत्र-संख्या १३७ ]

इति प्रथमोऽध्यायः ।

—०—

## अथ द्वितीयोऽध्यायः ।

कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि ॥ १ ॥

अदित्यै व्युन्दनमसि विष्णो स्तुपोऽस्यूर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्यो भुवपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा ॥ २ ॥

गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः । इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः । मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः ॥ ३ ॥

वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरे ॥ ४ ॥

समिदसि सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्यै । सवितुर्बाहू स्थ ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य आ त्वा वसवो रुद्रा आदित्याः सदन्तु ॥ ५ ॥

घृताच्यसि जुहूर्नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद घृताच्यस्युपभृन्नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद घृताच्यसि ध्रुवा नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद प्रियेण धाम्ना प्रियꣳ सद आसीद । ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञन्यम् ॥ ६ ॥

अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितꣳ सम्मार्ज्मि ।
नमो देवेभ्यः स्वधा पितृभ्यः सुयमे मे भूयास्तम् ॥७॥

अस्कन्नमद्य देवेभ्य आज्यꣳ संभ्रियासमङ्घ्रिणा विष्णो मा त्वावक्रमिषं वसुमतीमग्ने ते छायामुपस्थेषं विष्णो स्थानमसीत इन्द्रो वीर्यमकृणोदूर्ध्वोऽध्वर आस्थात् ॥ ८ ॥

अग्ने वेर्होत्रं वेर्दूत्यमवतां त्वां द्यावापृथिवी अव त्वं द्यावापृथिवी स्विष्टकृद्देवेभ्य इन्द्र आज्येन हविषा भूत्स्वाहा सं ज्योतिषा ज्योतिः ॥९॥

मयीदमिन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् । अस्माकँ सन्त्वाशिषः सत्या नः सन्त्वाशिष[1] उपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात्स्वाहा[2] ॥ १० ॥

उपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहा[1] । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्[2] । प्रतिगृह्णाम्यग्नेष्ट्वास्येन प्राश्नामि[3] ॥ ११ ॥

एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ १२ ॥

मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञँ समिमं दधातु ।
विश्वे देवास इह मादयन्तामो३म्प्रतिष्ठ ॥ १३ ॥

एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि[1] । अग्ने वाजजिद्वाजं त्वा ससृवाँसं वाजजितँ सम्मार्ज्मि[2] ॥ १४ ॥

अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि[1] । अग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि[2] । इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि[3] । इन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि[4] ॥ १५ ॥

वसुभ्यस्त्वा रुद्रेभ्यस्त्वा[2] ऽऽदित्येभ्यस्त्वा[3] संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावताम्[4] । व्यन्तु वयोक्तँ रिहाणा मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह । चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि[6] ॥ १६ ॥

यं परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः ।
तं त एतमनु जोषं भराम्येष नेत्त्वदपचेतयाता अग्नेः प्रियं पाथोऽपीतम्[2] ॥ १७ ॥

सँस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः ।
इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वँ स्वाहा वाट् ॥ १८ ॥

घृताची स्थो धुर्यौ पातँ सुम्ने स्थः सुम्ने मा धत्तम् ।
यज्ञ नमश्च त उप च यज्ञस्य शिवे संतिष्ठस्व स्विष्टे मे संतिष्ठस्व ॥ १९ ॥

अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या अविषं नः पितुं कृणु सुषदा योनौ स्वाहा वाडग्नये संवेशपतये स्वाहा सरस्वत्यै यशोभगिन्यै स्वाहा[3] ॥२०॥

वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः ।
देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं देव यज्ञँ स्वाहा वाते धाः ॥२१॥

संबर्हिरङ्क्ताᳬहविषा घृतेन समादित्यैर्वसुभिः सम्मरुद्भिः ।
समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा ॥ २२ ॥

कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति ।
पोषाय रक्षसां भागोऽसि ॥ २३ ॥

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सᳬशिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ २४ ॥

दिवि विष्णुर्व्यक्रᳬस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रᳬस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रᳬस्त गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठाया अगन्म स्वः सं ज्योतिषाभूम ॥ २५ ॥

स्वयंभूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि । सूर्यस्यावृतमन्वावर्ते ॥ २६ ॥

अग्ने गृहपते सुगृहपतिस्त्वयाऽग्नेऽहं गृहपतिना भूयासᳬसुगृहपतिस्त्वं मयाऽग्ने गृहपतिना भूयाः । अस्थूरि णौ गार्हपत्यानि सन्तु शतᳬहिमाः सूर्यस्यावृतमन्वावर्ते ॥२७॥

अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधीदमहं य एवास्मि सोऽस्मि ॥ २८ ॥

अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा ।
अपहता असुरा रक्षाᳬसि वेदिषदः ॥ २९ ॥

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ ३० ॥

अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ।
अमीमदन्त पितरो यथाभागमावृषायिषत ॥ ३१ ॥

नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वास आधत्त ॥ ३२ ॥

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत् ॥ ३३ ॥

ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ॥ ३४ ॥

[ अ० १, कं० ३४, मं० सं० ९५ ]

इति द्वितीयोऽध्यायः ।



# अथ तृतीयोऽध्यायः ।

समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन ॥ १ ॥

सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे ॥ २ ॥

तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥ ३ ॥

उप त्वाऽग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम ॥ ४ ॥

भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा ।
तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥ ५ ॥

आयं गौः पृश्निरक्रमीदसदन् मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ ६ ॥

अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन् महिषो दिवम् ॥ ७ ॥

त्रिꣳशद्धाम विराजति वाक् पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥ ८ ॥

अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ।
अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ।
ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥ ९ ॥

सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणो अग्निर्वेतु स्वाहा ।
सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्यो वेतु स्वाहा ॥ १० ॥

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ ११ ॥

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ॥ १२ ॥

उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै ।
उभा दातारा विषाꣳ रयीणामुभा वाजस्य सातये हुवे वाम् ॥ १३ ॥

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥ १४ ॥

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥ १५ ॥

अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ १६ ॥

तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि ।
अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥ १७ ॥

इन्धानास्त्वा शतꣳ हिमा द्युमन्तꣳ समिधीमहि । वयस्वन्तो वयस्कृतꣳ सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् । चित्रावसो स्वस्ति ते पारमशीय ॥ १८ ॥
सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाꣳ स्तुतेन ।
सं प्रियेण धाम्ना समहमायुषा सं वर्चसा सं प्रजया सꣳ रायस्पोषेण ग्मिषीय ॥ १९ ॥
अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीयोर्ज स्थोर्जं वो भक्षीय रायस्पोष स्थ रायस्पोषं वो भक्षीय ॥ २० ॥
रेवती रमध्वमस्मिन्योनावस्मिन् गोष्ठेऽस्मिँल्लोकेऽस्मिन् क्षये । इहैव स्त मापगात ॥ २१ ॥
सꣳहितासि विश्वरूप्यूर्जा माविश गौपत्येन ।
उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥ २२ ॥
राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे ॥ २३ ॥
स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ २४ ॥
अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः ॥ २५ ॥
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ।
स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् ॥ २६ ॥
इड एह्यदित एहि काम्या एत । मयि वः कामधरणं भूयात् ॥ २७ ॥
सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥ २८ ॥
यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्द्धनः । स नः सिषक्तु यस्तुरः ॥ २९ ॥
मा नः शꣳसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३० ॥
महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ ३१ ॥
नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशꣳसः ॥ ३२ ॥
ते हि पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥ ३३ ॥
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥ ३४ ॥
तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ३५ ॥
परि ते दूडभो रथोऽस्माँ२ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ ३६ ॥

भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याᳬ सुवीरो वीरैः सुपोषः पोषैः ।
नर्यं प्रजां मे पाहि शᳬस्य पशून्मे पाह्यथर्य पितुं मे पाहि ॥३७॥

आ गन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् । अग्ने सम्राडभि द्युम्नमभि सह आ यच्छस्व ॥३८॥

अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः ।
अग्ने गृहपतेऽभि द्युम्नमभि सह आ यच्छस्व ॥३९॥

अयमग्निः पुरीष्यो रयिमान् पुष्टिवर्धनः । अग्ने पुरीष्याभि द्युम्नमभि सह आ यच्छस्व ॥४०॥

गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि ।
ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥४१॥

येषामध्येति प्रवसन्येषु सौमनसो बहुः । गृहानुपह्वयामहे ते नो जानन्तु जानतः ॥४२॥

उपहूता इह गाव उपहूता अजावयः । अथो अन्नस्य कीलाल उपहूतो गृहेषु नः ।
क्षेमाय वः शान्त्यै प्रपद्ये शिवᳬ शग्मᳬ शंयोः शंयोः ॥४३॥

प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषसः ॥४४॥

यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यदेनश्चकृमा वयमिदं तदवयजामहे स्वाहा ॥४५॥

मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः ।
महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः ॥४६॥

अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वास्तं प्रेत सचाभुवः ॥४७॥

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।
अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ॥४८॥

पूर्णा दर्वि परा पत सुपूर्णा पुन रा पत । वस्नेव विक्रीणावहा इषमूर्जᳬ शतक्रतो ॥४९॥

देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारं च हरासि मे निहारं नि हराणि ते स्वाहा ॥५०॥

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥५१॥

सुसन्दृशं त्वा वयं मघवन्वन्दिषीमहि ।
प्र नूनं पूर्णबन्धुर स्तुतो यासि वशाँ२ अनु योजा न्विन्द्र ते हरी ॥५२॥

मनो न्वाह्वामहे नाराशᳬसेन स्तोमेन । पितॄणां च मन्मभिः ॥५३॥

आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥५४॥

पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातꣳ सचेमहि ॥५५॥

वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥५६॥

एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहैष ते रुद्र भाग आखुस्ते पशुः ॥५७॥

अव रुद्रमदीमह्यव देवं त्र्यम्बकम् ।

यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥५८॥

भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम् । सुखं मेषाय मेष्यै ॥५९॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ।
त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥६०॥

एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि ।

अवततधन्वा पिनाकावसः कृत्तिवासा अहिꣳसन्नः शिवोऽतीहि ॥६१॥

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥६२॥

शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीः ।

नि वर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥६३॥

[ अ० ३, कं० ६३, मं० सं० ७९ ]

इति तृतीयोऽध्यायः ।

## अथ चतुर्थोऽध्यायः ।

एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे ।
ऋक्सामाभ्याꣳ सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम ।
इमा आपः शमु मे सन्तु देवीरोषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥१॥
आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वꣳ हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ।
दीक्षातपसोस्तनूरसि तां त्वा शिवाꣳ शग्मां परि दधे भद्रं वर्णं पुष्यन् ॥ २ ॥

महीनां पयोऽसि वर्चोदा असि वर्चो मे देहि ।

वृत्रस्यासि कनीनकश्चक्षुर्दा असि चक्षुर्मे देहि ॥ ३ ॥

चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ ४ ॥

आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामहे[१] ॥५॥

स्वाहा यज्ञं मनसः स्वाहोरोरन्तरिक्षात्स्वाहा[२] द्यावापृथिवीभ्याᳬ स्वाहा[३] वातादारभे स्वाहा[४] ॥६॥

आकूत्यै प्रयुजेऽग्नये स्वाहा[१] मेधायै मनसेऽग्नये स्वाहा[२] दीक्षायै तपसेऽग्नये स्वाहा[३] सरस्वत्यै पूष्णेऽग्नये स्वाहा[४] । आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरो अन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहा[५] ॥७॥

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा[१] ॥८॥

ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः[१] ।
शर्मासि शर्म मे यच्छ नमस्ते अस्तु मा मा हिंᳬसीः[२] ॥९॥

ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मयि धेहि[१] । सोमस्य नीविरसि[२] विष्णोः शर्मासि शर्म यजमानस्ये[३]न्द्रस्य योनिरसि[४] सुसस्याः कृषीस्कृधि[५] । उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यᳬहस आस्य यज्ञस्योदृचः[६] ॥१०॥

व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः[१] । दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसᳬ सुतीर्था नो असद्वशे[२] । ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा[३] ॥११॥

श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः ।
ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः[१] ॥१२॥

इयं ते यज्ञिया तनूरपो मुञ्चामि न प्रजाम् ।
अᳬहोमुचः स्वाहाकृताः पृथिवीमा विशत पृथिव्या सम्भव[१] ॥१३॥

अग्ने त्वᳬ सु जागृहि वयᳬ सु मन्दिषीमहि । रक्षा णो अप्रयुच्छन् प्रबुधे नः पुनस्कृधि[१] ॥१४॥

पुनर्मनः पुनरायुर्म आऽगन् पुनः प्राणः पुनरात्मा म आऽगन् पुनश्चक्षुः पुनः श्रोत्रं म आऽगन् । वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात्[१] ॥१५॥

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः[१] ।
रास्वेयत्सोमा भूयो भर देवो नः सविता वसोर्दाता वस्वदात्[२] ॥१६॥

एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजं गच्छ[१] ।
जूरसि धृता मनसा जुष्टा विष्णवे[२] ॥१७॥

❀

तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ।
शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥१८॥

चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी ।
सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीतां पूषाऽध्वनस्पात्विन्द्रायाध्यक्षाय ॥१९॥

अनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ।
सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वा वर्त्तयतु स्वस्ति सोमसखा पुनरेहि ॥२०॥

वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि ।
बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिरा चके ॥२१॥

अदित्यास्त्वा मूर्द्धन्नाजिघर्मि देवयजने पृथिव्या इडायास्पदमसि घृतवत् स्वाहा । अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो मा वयꣳ रायस्पोषेण वियौष्म तोतो रायः ॥२२

समख्ये देव्या धिया सं दक्षिणयोरुचक्षसा ।
मा म आयुः प्रमोषीर्मो अहं तव वीरं विदेय तव देवि सन्दृशि ॥२३॥

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोनामानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादास्माकोऽसि शुक्रस्ते ग्रह्यो विचितस्त्वा वि चिन्वन्तु ॥२४॥

अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिं कविम् ।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ।
प्रजाभ्यस्त्वा प्रजास्त्वाऽनुप्राणन्तु प्रजास्त्वमनुप्राणिहि ॥२५॥

शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन ।
सग्मे ते गोरस्मे ते चन्द्राणि तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे
सहस्रपोषं पुषेयम् ॥२६॥

मित्रो न एहि सुमित्रध इन्द्रस्योरुमा विश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् ।
स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् ॥२७॥

परि माऽग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज ।
उदायुषा स्वायुषोदस्थाममृताँ२ अनु ॥२८॥

प्रति पन्थामपद्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥२९॥

अदित्यास्त्वगस्यदित्यै सद आसीद ।
अस्तभ्नाद्द्यां वृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्याः ।
आऽसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥३०॥
वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।
हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ ३१ ॥
सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता ॥३२॥
उस्रावेतं धूर्षाहौ युज्येथामनश्रू अवीरहणौ ब्रह्मचोदनौ ।
स्वस्ति यजमानस्य गृहान् गच्छतम् ॥३३॥
भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि ।
मा त्वा परिपरिणो विदन् मा त्वा परिपन्थिनो विदन् मा त्वा वृका अघायवो विदन् ।
श्येनो भूत्वा परा पत यजमानस्य गृहान् गच्छ तन्नौ संस्कृतम् ॥३४॥
नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत ॥३५॥
वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यसि
वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमा सीद ॥३६॥
या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ॥३७॥

[ अ० ४, कं० ३७, मं० सं० ८१ ]

इति चतुर्थोऽध्यायः ।

# अथ पञ्चमोऽध्यायः ।

अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे त्वा ऽतिथेरातिथ्यमसि विष्णवे त्वा
श्येनाय त्वा सोमभृते विष्णवे त्वाऽग्नये त्वा रायस्पोषदे विष्णवे त्वा ॥१॥
अग्नेर्जनित्रमसि वृषणौ स्थ उर्वश्यस्यायुरसि पुरूरवा असि । गायत्रेण त्वा छन्दसा
मन्थामि त्रैष्टुभेन त्वा छन्दसा मन्थामि जागतेन त्वा छन्दसा मन्थामि ॥२॥

भवतं नः समनसौ सचेतसावरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥३॥

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा ।
स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहा ॥४॥

आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्कराय शक्कन ओजिष्ठाय । अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुपगेषꣳ स्विते मा धाः ॥५॥

अग्ने व्रतपास्त्वे व्रतपा या तव तनूरियꣳ सा मयि यो मम तनूरेषा सा त्वयि ।
सह नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः ॥६॥

अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे ।
आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व ।
आप्याययास्मान्त्सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय ।
एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम् ॥७॥

या ते अग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा ।
या ते अग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा ।
या ते अग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा ॥८॥

तप्तायनी मेऽसि वित्तायनी मेऽस्यवतान्मा नाथितादवतान्मा व्यथितात् । विदेदग्निर्नभो नामाऽग्ने अङ्गिर आयुना नाम्नेहि योऽस्यां पृथिव्यामसि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वा दधे विदेदग्निर्नभो नामाऽग्ने अङ्गिर आयुना नाम्नेहि यो द्वितीयस्यां पृथिव्यामसि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वा दधे विदेदग्निर्नभो नामाऽग्ने अङ्गिर आयुना नाम्नेहि यस्तृतीयस्यां पृथिव्यामसि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वा दधे । अनु त्वा देववीतये ॥९॥

सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्व
सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्व ॥१०॥

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पात्विदमहं तप्तं वार्बहिर्धा यज्ञान्निः सृजामि ॥११॥

सिꣳह्यसि स्वाहा सिꣳह्यस्यादित्यवनिः स्वाहा सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहा सिꣳह्यस्या वह देवान् यजमानाय स्वाहा भूतेभ्यस्त्वा ॥१२॥

ध्रुवोऽसि पृथिवीं दृꣳह ध्रुवक्षिदस्यन्तरिक्षं दृꣳह अच्युतक्षिदसि दिवं दृꣳहाग्नेः पुरीषमसि ॥१३॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ॥१४॥

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥१५॥

इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या ।
व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥१६॥

देवश्रुतौ देवेष्वा घोषतं प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम् । स्वं गोष्ठमा वदतं देवी दुर्ये आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टमत्र रमेथां वर्ष्मन् पृथिव्याः ॥१७॥

विष्णोर्नुकं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजाꣳसि ।
यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥ १८ ॥

दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् ।
उभा हि हस्ता वसुना पृणस्वा प्र यच्छ दक्षिणादोत सव्याद्विष्णवे त्वा ॥ १९ ॥

प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २० ॥

विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि ।
वैष्णवमसि विष्णवे त्वा ॥ २१ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
आ ददे नार्यसीदमहꣳ रक्षसां ग्रीवा अपि कृन्तामि ।
बृहन्नसि बृहद्रवा बृहतीमिन्द्राय वाचं वद ॥२२॥

रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानोत्कृत्यां किरामि ॥२३॥

स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहा ॥२४॥

रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान् रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान् रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान् रक्षोहणौ वां वलगहना उप दधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवा स्थ ॥२५॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
आ ददे नार्यसी दमहꣳ रक्षसां ग्रीवा अपि कृन्तामि । यवोऽसि यवयास्मद्द्वेषो यवयारातीर्दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥२६॥

उद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्यां द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा । ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि । ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह ॥२७॥

ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात् ।
घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्य छदिरसि विश्वजनस्य छाया ॥२८॥

परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥२९॥

इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोऽसि । ऐन्द्रमसि वैश्वदेवमसि ॥३०॥

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः । श्वात्रोऽसि प्रचेतास्तुथोऽसि विश्ववेदाः ॥३१॥

उशिगसि कविरङ्घारिरसि बम्भारिरवस्यूरसि दुवस्वाञ्छुन्ध्यूरसि मार्जालीयः सम्राडसि कृशानुः परिषद्योऽसि पवमानो नभोऽसि प्रतक्वा मृष्टोऽसि हव्यसूदन ऋतधामाऽसि स्वर्ज्योतिः ॥३२॥

समुद्रोऽसि विश्वव्यचा अजोऽस्येकपादहिरसि बुध्न्यो वागस्यैन्द्रमसि सदोऽस्यृतस्य द्वारौ मा मा सन्ताप्तमध्वनामध्वपते प्र मा तिर स्वस्ति मेऽस्मिन्पथि देवयाने भूयात् ॥३३॥

मित्रस्य मा चक्षुषेक्षध्वमग्नयः सगराः सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन पात माऽग्नयः पिपृत माऽग्नयो गोपायत मा नमो वोऽस्तु मा मा हिꣳसिष्ट ॥३४॥

ज्योतिरसि विश्वरूपं विश्वेषां देवानाꣳ समित् । त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहा जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥३५॥

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥३६॥

अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं वाजाञ्जयतु वाजसातावयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥३७॥

उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा ॥३८

देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् ।
एतत्त्वं देव सोम देवो देवाँ२ उपागा इदमहं मनुष्यान्त्सह रायस्पोषेण
स्वाहा निर्वरुणस्य पाशान्मुच्ये ॥३९॥

अग्ने व्रतपास्त्वे व्रतपा या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ सा मयि ।
यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरमꣳस्तानु तपस्तपस्पतिः ॥४०॥

उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा ॥४१

अत्यन्याँ२ अगां नान्याँ२ उपागामर्वाक् त्वा परेभ्योऽविदं परोऽवरेभ्यः ।
तं त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्तां विष्णवे त्वा ।
ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥४२॥

द्यां मा लेखीरन्तरिक्षं मा हिꣳसीः पृथिव्या सम्भव ।
अयꣳ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय ।
अतस्त्वं देव वनस्पते शतवल्शो वि रोह सहस्रवल्शा वि वयꣳ रुहेम ॥४३॥

[ अ० ५, कं० ४३, मं० सं० १५० ]

इति पञ्चमोऽध्यायः ।

---

# अथ षष्ठोऽध्यायः ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आ ददे नार्यसी — दमहꣳ रक्षसां
ग्रीवा अपि कृन्तामि । यवोऽसि यवयास्मद् द्वेषो यवयाराती — र्दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै
त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥१॥

अग्रेणीरसि स्वावेश उन्नेतॄणामेतस्य वित्तादधि त्वा स्थास्यति देवस्त्वा सविता मध्वानक्तु
सुपिप्पलाभ्यस्त्वौषधीभ्यः । द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृꣳहीः ॥२

या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य विष्णोः परमं पदमव भारि भूरि । ब्रह्मवनिं त्वा क्षत्रवनिं
रायस्पोषवनि पर्यूहामि । ब्रह्म दृंह क्षत्रं दृंहायुर्दृंह प्रजां दृंह ॥३॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥४॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥५॥
परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानं रायो मनुष्याणाम् ।
दिवः सूनुरस्येष ते पृथिव्याँल्लोक आरण्यस्ते पशुः ॥६॥
उपावीरस्युप देवान्दैवीर्विशः प्रागुरुशिजो वह्नितमान् ।
देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम् ॥७॥
रेवती रमध्वं बृहस्पते धारया वसूनि ।
ऋतस्य त्वा देवहविः पाशेन प्रति मुञ्चामि धर्षा मानुषः ॥८॥
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
अग्नीषोमाभ्यां जुष्टं नि युनज्मि । अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्यतामनु पिताऽनु भ्राता
सगर्भ्योऽनु सखा सयूथ्यः । अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि ॥९॥
अपां पेरुरस्यापो देवीः स्वदन्तु स्वात्तं चित्सद्देवहविः ।
सं ते प्राणो वातेन गच्छतां समङ्गानि यजत्रैः सं यज्ञपतिराशिषा ॥१०॥
घृतेनाक्तौ पशूँस्त्रायेथां रेवति यजमाने प्रियं धा आ विश ।
उरोरन्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव ।
वर्षो वर्षीयसि यज्ञे यज्ञपतिं धाः स्वाहा देवेभ्यो देवेभ्यः स्वाहा ॥११॥
माहिर्भूर्मा पृदाकुर्नमस्त आतानानर्वा प्रेहि । घृतस्य कुल्या उप ऋतस्य पथ्या अनु ॥१२॥
देवीरापः शुद्धा वोढ्वं सुपरिविष्टा देवेषु सुपरिविष्टा वयं परिवेष्टारो भूयास्म ॥१३॥
वाचं ते शुन्धामि प्राणं ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रं ते शुन्धामि
नाभिं ते शुन्धामि मेढ्रं ते शुन्धामि पायुं ते शुन्धामि चरित्राँस्ते शुन्धामि ॥१४॥
मनस्त आ प्यायतां वाक्त आ प्यायतां प्राणस्त आ प्यायतां चक्षुस्त आ प्यायतां
श्रोत्रं त आ प्यायताम् । यत्ते क्रूरं यदास्थितं तत्त आ प्यायतां निष्ट्यायतां तत्ते शुध्यतु
शमहोभ्यः । ओषधे त्रायस्व स्वधिते मैनं हिंसीः ॥१५॥

रक्षसां भागोऽसि निरस्तꣳ रक्ष इदमहꣳ रक्षोऽभि तिष्ठामीदमहꣳ रक्षोऽव बाध इदमहꣳ रक्षोऽधमं तमो नयामि । घृतेन द्यावापृथिवी प्रोर्णुवाथां वायो वे स्तोकानामग्निराज्यस्य वेतु स्वाहा स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतम् ॥१६॥

इदमापः प्र वहतावद्यं च मलं च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् ।
आपो मा तस्मादेनसः पवमानश्च मुञ्चतु ॥१७॥

सं ते मनो मनसा सं प्राणः प्राणेन गच्छताम् । रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रꣳह्या ऊष्मणो व्यथिषत् प्रयुतं द्वेषः ॥१८॥

घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा ।
दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा ॥१९॥

ऐन्द्रः प्राणो अङ्गे अङ्गे नि दीध्यदैन्द्र उदानो अङ्गे अङ्गे निधीतः ।
देव त्वष्टर्भूरि ते सꣳ समेतु सलक्ष्मा यद्विषुरूपं भवाति ।
देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु ॥२०॥

समुद्रं गच्छ स्वाहाऽन्तरिक्षं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमं गच्छ स्वाहा दिव्यं नभो गच्छ स्वाहाऽग्निं वैश्वानरं गच्छ स्वाहा मनो मे हार्दि यच्छ दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनाऽऽपृण स्वाहा ॥२१

माऽपो मौषधीर्हिꣳसीर्धाम्नो धाम्नो राजँस्ततो वरुण नो मुञ्च ।
यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ।
सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः॥२२

हविष्मतीरिमा आपो हविष्माँ२ आ विवासति ।
हविष्मान् देवो अध्वरो हविष्माँ२ अस्तु सूर्यः ॥२३॥

अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीन्द्राग्न्योर्भागधेयी स्थ मित्रावरुणयोर्भागधेयी स्थ विश्वेषां देवानां भागधेयी स्थ । अमूर्या उप सूर्ये याभिर्वा सूर्यः सह ।
ता नो हिन्वन्त्वध्वरम् ॥२४॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ ॥२५॥

❀

